देवकीसुत गोविन्द वासुदेव जगत्पते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ११॥
वासुदेव जगद्वन्द्य श्रीपते पुरुषोत्तम।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ १२॥
कञ्जाक्ष कमलानाथ परकारुणिकोत्तम।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ १३॥
लक्ष्मीपते पद्मनाभ मुकुन्द मुनिवन्दित।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ १४॥
कार्यकारणरूपाय वासुदेवाय ते सदा।
नमामि पुत्रलाभार्थं सुखदाय बुधाय ते॥ १५॥
राजीवनेत्र श्रीराम रावणारे हरे कवे।
तुभ्यं नमामि देवेश तनयं देहि मे हरे॥ १६॥
अस्माकं पुत्रलाभाय भजामि त्वां जगत्पते।
देहि मे तनयं कृष्ण वासुदेव रमापते॥ १७॥
श्रीमानिनीमानचोर गोपीवस्त्रापहारक।
देहि मे तनयं कृष्ण वासुदेव जगत्पते॥ १८॥
अस्माकं पुत्रसम्प्राप्तिं कुरुष्व यदुनन्दन।
रमापते वासुदेव मुकुन्द मुनिवन्दित॥ १९॥
वासुदेव सुतं देहि तनयं देहि माधव।
पुत्रं मे देहि श्रीकृष्ण वत्सं देहि महाप्रभो॥ २०॥
डिम्भकं देहि श्रीकृष्ण आत्मजं देहि राघव।
भक्तमन्दार मे देहि तनयं नन्दनन्दन॥ २१॥

नन्दनं देहि मे कृष्ण वासुदेव जगत्पते।
कमलानाथ गोविन्द मुकुन्द मुनिवन्दित॥ २२॥

अन्यथा शरणं नास्ति त्वमेव शरणं मम।
सुतं देहि श्रियं देहि श्रियं पुत्रं प्रदेहि मे॥ २३॥

यशोदा-स्तन्यपानज्ञं पिबन्तं यदुनन्दनम्।
वन्देऽहं पुत्रलाभार्थं कपिलाक्षं हरिं सदा॥ २४॥

नन्दनन्दन देवेश नन्दनं देहि मे प्रभो।
रमापते वासुदेव श्रियं पुत्रं जगत्पते॥ २५॥

पुत्रं श्रियं श्रियं पुत्रं पुत्रं मे देहि माधव।
अस्माकं दीनवाक्यस्य अवधारय श्रीपते॥ २६॥

गोपालडिम्भ गोविन्द वासुदेव रमापते।
अस्माकं डिम्भकं देहि श्रियं देहि जगत्पते॥ २७॥

मद्वाञ्छितफलं देहि देवकीनन्दनाच्युत।
मम पुत्रार्थितं धन्यं कुरुष्व यदुनन्दन॥ २८॥

याचेऽहं त्वां श्रियं पुत्रं देहि मे पुत्रसम्पदम्।
भक्तचिन्तामणे राम कल्पवृक्ष महाप्रभो॥ २९॥

आत्मजं नन्दनं पुत्रं कुमारं डिम्भकं सुतम्।
अर्भकं तनयं देहि सदा मे रघुनन्दन॥ ३०॥

वन्दे सन्तानगोपालं माधवं भक्तकामदम्।
अस्माकं पुत्रसम्प्राप्त्यै सदा गोविन्दमच्युतम्॥ ३१॥

ओङ्कारयुक्तं गोपालं श्रीयुक्तं यदुनन्दनम्।
क्लींयुक्तं देवकीपुत्रं नमामि यदुनायकम्॥ ३२॥

वासुदेव मुकुन्देश गोविन्द माधवाच्युत।
देहि मे तनयं कृष्ण रमानाथ महाप्रभो॥ ३३॥
राजीवनेत्र गोविन्द कपिलाक्ष हरे प्रभो।
समस्तकाम्यवरद देहि मे तनयं सदा॥ ३४॥
अब्जपद्मनिभं पद्मवृन्दरूप जगत्पते।
देहि मे वरसत्पुत्रं रमानायक माधव॥ ३५॥
नन्दपाल धरापाल गोविन्द यदुनन्दन।
देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो॥ ३६॥
दासमन्दार गोविन्द मुकुन्द माधवाच्युत।
गोपाल पुण्डरीकाक्ष देहि मे तनयं श्रियम्॥ ३७॥
यदुनायक पद्मेश नन्दगोपवधूसुत।
देहि मे तनयं कृष्ण श्रीधर प्राणनायक॥ ३८॥
अस्माकं वाञ्छितं देहि देहि पुत्रं रमापते।
भगवन् कृष्ण सर्वेश वासुदेव जगत्पते॥ ३९॥
रमाहृदयसम्भार सत्यभामामनःप्रिय।
देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो॥ ४०॥
चन्द्रसूर्याक्ष गोविन्द पुण्डरीकाक्ष माधव।
अस्माकं भाग्यसत्पुत्रं देहि देव जगत्पते॥ ४१॥
कारुण्यरूप पद्माक्ष पद्मनाभसमर्चित।
देहि मे तनयं कृष्ण देवकी-नन्दनन्दन॥ ४२॥
देवकीसुत श्रीनाथ वासुदेव जगत्पते।
समस्तकामफलद देहि मे तनयं सदा॥ ४३॥

भक्तमन्दार गम्भीर शङ्कराच्युत माधव।
देहि मे तनयं गोपबालवत्सल श्रीपते॥४४॥
श्रीपते वासुदेवेश देवकीप्रियनन्दन।
भक्तमन्दार मे देहि तनयं जगतां प्रभो॥४५॥
जगन्नाथ रमानाथ भूमिनाथ दयानिधे।
वासुदेवेश सर्वेश देहि मे तनयं प्रभो॥४६॥
श्रीनाथ कमलपत्राक्ष वासुदेव जगत्पते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥४७॥
दासमन्दार गोविन्द भक्तचिन्तामणे प्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥४८॥
गोविन्द पुण्डरीकाक्ष रमानाथ महाप्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥४९॥
श्रीनाथ कमलपत्राक्ष गोविन्द मधुसूदन।
मत्पुत्रफलसिद्ध्यर्थं भजामि त्वां जनार्दन॥५०॥
स्तन्यं पिबन्तं जननीमुखाम्बुजं
विलोक्य मन्दस्मितमुज्ज्वलाङ्गम्।
स्पृशन्तमन्यस्तनमङ्गुलीभिः
वन्दे यशोदाङ्कगतं मुकुन्दम्॥५१॥
याचेऽहं पुत्रसन्तानं भवन्तं पद्मलोचन।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥५२॥
अस्माकं पुत्रसम्पत्तेश्चिन्तयामि जगत्पते।
शीघ्रं मे देहि दातव्यं भवता मुनिवन्दित॥५३॥

वासुदेव जगन्नाथ श्रीपते पुरुषोत्तम।
कुरु मां पुत्रदत्तं च कृष्ण देवेन्द्रपूजित॥५४॥

कुरु मां पुत्रदत्तं च यशोदा-प्रियनन्दन।
मह्यं च पुत्र-सन्तानं दातव्यं भवता हरे॥५५॥

वासुदेव जगन्नाथ गोविन्द देवकीसुत।
देहि मे तनयं राम कौसल्याप्रियनन्दन॥५६॥

पद्मपत्राक्ष गोविन्द विष्णो वामन माधव।
देहि मे तनयं सीताप्राणनायक राघव॥५७॥

कञ्जाक्ष कृष्ण देवेन्द्रमण्डित मुनिवन्दित।
लक्ष्मणाग्रज श्रीराम देहि मे तनयं सदा॥५८॥

देहि मे तनयं राम दशरथ-प्रियनन्दन।
सीतानायक कञ्जाक्ष मुचुकुन्दवरप्रद॥५९॥

विभीषणस्य या लङ्का प्रदत्ता भवता पुरा।
अस्माकं तत्प्रकारेण तनयं देहि माधव॥६०॥

भवदीयपदाम्भोजे चिन्तयामि निरन्तरम्।
देहि मे तनयं सीताप्राणवल्लभ राघव॥६१॥

राम मत्काम्यवरद पुत्रोत्पत्तिफलप्रद।
देहि मे तनयं श्रीश कमलासनवन्दित॥६२॥

राम राघव सीतेश लक्ष्मणाग्रज देहि मे।
भाग्यवत् पुत्रसन्तानं दशरथात्मज श्रीपते॥६३॥

देवकीगर्भसञ्जात यशोदाप्रियनन्दन।
देहि मे तनयं राम कृष्ण गोपाल माधव॥६४॥

कृष्ण माधव गोविन्द वामनाच्युत शङ्कर।
देहि मे तनयं श्रीश गोपबालकनायक॥ ६५॥

गोपबाल महाधन्य गोविन्दाच्युत माधव।
देहि मे तनयं कृष्ण वासुदेव जगत्पते॥ ६६॥

दिशतु दिशतु पुत्रं देवकीनन्दनोऽयं
दिशतु दिशतु शीघ्रं भाग्यवत्पुत्रलाभम्।
दिशतु दिशतु श्रीशो राघवो रामचन्द्रो
दिशतु दिशतु पुत्रं वंशविस्तारहेतोः॥ ६७॥

दीयतां वासुदेवेन तनयो मत्प्रियः सुतः।
कुमारो नन्दनः सीतानायकेन सदा मम॥ ६८॥

राम राघव गोविन्द देवकीसुत माधव।
देहि मे तनयं श्रीश गोपबालकनायक॥ ६९॥

वंशविस्तारकं पुत्रं देहि मे मधुसूदन।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७०॥

ममाभीष्टसुतं देहि कंसारे माधवाच्युत।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७१॥

चन्द्रार्ककल्पपर्यन्तं तनयं देहि माधव।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७२॥

विद्यावन्तं बुद्धिमन्तं श्रीमन्तं तनयं सदा।
देहि मे तनयं कृष्ण देवकीनन्दन प्रभो॥ ७३॥

नमामि त्वां पद्मनेत्र सुतलाभाय कामदम्।
मुकुन्दं पुण्डरीकाक्षं गोविन्दं मधुसूदनम्॥ ७४॥

भगवन् कृष्ण गोविन्द सर्वकामफलप्रद।
देहि मे तनयं स्वामिंस्त्वामहं शरणं गतः॥७५॥
स्वामिंस्त्वं भगवन् राम कृष्ण माधव कामद।
देहि मे तनयं नित्यं त्वामहं शरणं गतः॥७६॥
तनयं देहि गोविन्द कञ्जाक्ष कमलापते।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥७७॥
पद्मापते पद्मनेत्र प्रद्युम्नजनक प्रभो।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥७८॥
शङ्खचक्रगदाखड्गशार्ङ्गपाणे रमापते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥७९॥
नारायण रमानाथ राजीवपत्रलोचन।
सुतं मे देहि देवेश पद्मपद्मानुवन्दित॥८०॥
राम राघव गोविन्द देवकीवरनन्दन।
रुक्मिणीनाथ सर्वेश नारदादिसुरार्चित॥८१॥
देवकीसुत गोविन्द वासुदेव जगत्पते।
देहि मे तनयं श्रीश गोपबालकनायक॥८२॥
मुनिवन्दित गोविन्द रुक्मिणीवल्लभ प्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥८३॥
गोपिकार्जितपङ्केजमरन्दासक्तमानस ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥८४॥
रमाहृदयपङ्केजलोल माधव कामद।
ममाभीष्टसुतं देहि त्वामहं शरणं गतः॥८५॥

वासुदेव रमानाथ दासानां मङ्गलप्रद।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥८६॥

कल्याणप्रद गोविन्द मुरारे मुनिवन्दित।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥८७॥

पुत्रप्रद मुकुन्देश रुक्मिणीवल्लभ प्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥८८॥

पुण्डरीकाक्ष गोविन्द वासुदेव जगत्पते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥८९॥

दयानिधे वासुदेव मुकुन्द मुनिवन्दित।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥९०॥

पुत्रसम्पत्प्रदातारं गोविन्दं देवपूजितम्।
वन्दामहे सदा कृष्णं पुत्रलाभप्रदायिनम्॥९१॥

कारुण्यनिधये गोपीवल्लभाय मुरारये।
नमस्ते पुत्रलाभार्थं देहि मे तनयं विभो॥९२॥

नमस्तस्मै रमेशाय रुक्मिणीवल्लभाय ते।
देहि मे तनयं श्रीश गोपबालकनायक॥९३॥

नमस्ते वासुदेवाय नित्यश्रीकामुकाय च।
पुत्रदाय च सर्पेन्द्रशायिने रङ्गशायिने॥९४॥

रङ्गशायिन् रमानाथ मङ्गलप्रद माधव।
देहि मे तनयं श्रीश गोपबालकनायक॥९५॥

दासस्य मे सुतं देहि दीनमन्दार राघव।
सुतं देहि सुतं देहि पुत्रं देहि रमापते॥९६॥

यशोदातनयाभीष्टपुत्रदानरतः सदा।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥९७॥

मदिष्टदेव गोविन्द वासुदेव जनार्दन।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥९८॥

नीतिमान् धनवान् पुत्रो विद्यावांश्च प्रजायते।
भगवंस्त्वत्कृपायाश्च वासुदेवेन्द्रपूजित॥९९॥

यः पठेत् पुत्रशतकं सोऽपि सत्पुत्रवान् भवेत्।
श्रीवासुदेवकथितं स्तोत्ररत्नं सुखाय च॥१००॥

जपकाले पठेन्नित्यं पुत्रलाभं धनं श्रियम्।
ऐश्वर्यं राजसम्मानं सद्यो याति न संशयः॥१०१॥

॥इति श्री-सन्तानगोपालस्तोत्रं सम्पूर्णम्॥

# ॥ सङ्क्षेपरामायणम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥
वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥

## ॥ श्री-गुरु-प्रार्थना ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परं ब्रह्म तस्मै श्री-गुरवे नमः॥
सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्री-गुरवे नमः॥

## ॥ श्री-सरस्वती-प्रार्थना ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिनिभैरक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना॥

## ॥ श्री-वाल्मीकि-नमस्क्रिया ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्॥ १ ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः।
शृण्वन् रामकथानादं को न याति परां गतिम्॥ २॥

यः पिबन् सततं रामचरितामृतसागरम्।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम्॥ ३॥

**॥ श्री-हनुमन्नमस्क्रिया॥**

गोष्पदीकृत-वाराशिं मशकीकृत-राक्षसम्।
रामायण-महामाला-रत्नं वन्देऽनिलात्मजम्॥ १॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम्।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम्॥ २॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम्॥ ३॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रि-कमनीय-विग्रहम्।
पारिजात-तरुमूल-वासिनं भावयामि पवमान-नन्दनम्॥ ४॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम्।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम्॥ ५॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि॥ ६॥

## ॥ श्री-रामायण-प्रार्थना ॥

यः कर्णाञ्जलिसम्पुटैरहरहः सम्यक् पिबत्यादरात्
वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु।
जन्म-व्याधि-जरा-विपत्ति-मरणैरत्यन्त-सोपद्रवम्
संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम्॥ १ ॥

तदुपगत-समास-सन्धियोगं सममधुरोपनतार्थ-वाक्यबद्धम्।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम्॥ २ ॥

वाल्मीकि-गिरिसम्भूता रामसागरगामिनी।
पुनातु भुवनं पुण्या रामायणमहानदी॥ ३ ॥

श्लोकसारजलाकीर्णं सर्गकल्लोलसङ्कुलम्।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम्॥ ४ ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना॥ ५ ॥

## ॥ श्री-राम-ध्यानम् ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परम्
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥ १ ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्॥ २॥

रामं रामानुजं सीतां भरतं भरतानुजम्।
सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः॥ ३॥

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥ ४॥

ॐ श्री-गुरुभ्यो नमः।

## ॥ श्रीमद्रामायणम् ॥

## ॥ बालकाण्डः ॥

## ॥ अथ प्रथमोऽध्यायः ॥

तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥

को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥

आत्मवान् को जितक्रोधो मतिमान् कोऽनसूयकः।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥

श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः।
श्रूयतामिति चाऽऽमन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ ८ ॥

बुद्धिमान् नीतिमान् वाग्मी श्रीमाञ्छत्रुनिबर्हणः।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः॥ १० ॥

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः॥ ११ ॥

धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान्॥ १२ ॥

प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता॥ १३ ॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः॥ १४ ॥

सर्वशास्त्रार्थतत्त्वज्ञो स्मृतिमान् प्रतिभानवान्।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः॥ १५ ॥

सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः॥ १६ ॥

स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव॥ १७ ॥

विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः॥ १८ ॥

धनदेन समस्त्यागे सत्ये धर्म इवापरः।
तमेवङ्गुणसम्पन्नं रामं सत्यपराक्रमम्॥ १९ ॥

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम्।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया॥२०॥
यौवराज्येन संयोक्तुम् ऐच्छत् प्रीत्या महीपतिः।
तस्याभिषेकसम्भारान् दृष्ट्वा भार्याऽथ कैकयी॥२१॥
पूर्वं दत्तवरा देवी वरमेनमयाचत।
विवासनं च रामस्य भरतस्याभिषेचनम्॥२२॥
स सत्यवचनाद्राजा धर्मपाशेन संयतः।
विवासयामास सुतं रामं दशरथः प्रियम्॥२३॥
स जगाम वनं वीरः प्रतिज्ञामनुपालयन्।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात्॥२४॥
तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह।
स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः॥२५॥
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्।
रामस्य दयिता भार्या नित्यं प्राणसमा हिता॥२६॥
जनकस्य कुले जाता देवमायेव निर्मिता।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः॥२७॥
सीताऽप्यनुगता रामं शशिनं रोहिणी यथा।
पौरैरनुगतो दूरं पित्रा दशरथेन च॥२८॥
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत्।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम्॥२९॥
गुहेन सहितो रामो लक्ष्मणेन च सीतया।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः॥३०॥

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात्।
रम्यमावसथं कृत्वा रममाणा वने त्रयः॥ ३१॥

देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम्।
चित्रकूटं गते रामे पुत्रशोकातुरस्तथा॥ ३२॥

राजा दशरथः स्वर्गं जगाम विलपन् सुतम्।
मृते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः॥ ३३॥

नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः।
स जगाम वनं वीरो रामपादप्रसादकः॥ ३४॥

गत्वा तु स महात्मानं रामं सत्यपराक्रमम्।
अयाचद्भ्रातरं रामम् आर्यभावपुरस्कृतः॥ ३५॥

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत्।
रामोऽपि परमोदारः सुमुखः सुमहायशाः॥ ३६॥

न चेच्छत् पितुरादेशाद्राज्यं रामो महाबलः।
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः॥ ३७॥

निवर्तयामास ततो भरतं भरताग्रजः।
स काममनवाप्यैव रामपादावुपस्पृशन्॥ ३८॥

नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया।
गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः॥ ३९॥

रामस्तु पुनरालक्ष्य नागरस्य जनस्य च।
तत्राऽऽगमनमेकाग्रो दण्डकान् प्रविवेश ह॥ ४०॥

प्रविश्य तु महारण्यं रामो राजीवलोचनः।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह॥ ४१॥

सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम्॥४२॥
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ।
वसतस्तस्य रामस्य वने वनचरैः सह॥४३॥
ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम्।
स तेषां प्रति शुश्राव राक्षसानां तदा वने॥४४॥
प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम्।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम्॥४५॥
तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी॥४६॥
ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान्।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम्॥४७॥
निजघान रणे रामस्तेषां चैव पदानुगान्।
वने तस्मिन् निवसता जनस्थाननिवासिनाम्॥४८॥
रक्षसां निहतान्यासन् सहस्राणि चतुर्दश।
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः॥४९॥
सहायं वरयामास मारीचं नाम राक्षसम्।
वार्यमाणः सुबहुशो मारीचेन स रावणः॥५०॥
न विरोधो बलवता क्षमो रावण तेन ते।
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः॥५१॥
जगाम सहमारीचस्तस्याऽऽश्रमपदं तदा।
तेन मायाविना दूरमपवाह्य नृपात्मजौ॥५२॥

जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम्।
गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम्॥५३॥
राघवः शोकसन्तप्तो विललापाऽऽकुलेन्द्रियः।
ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम्॥५४॥
मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम्॥५५॥
तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः।
स चास्य कथयामास शबरीं धर्मचारिणीम्॥५६॥
श्रमणीं धर्मनिपुणाम् अभिगच्छेति राघव।
सोऽभ्यगच्छन् महातेजाः शबरीं शत्रुसूदनः॥५७॥
शबर्या पूजितः सम्यग्रामो दशरथात्मजः।
पम्पातीरे हनुमता सङ्गतो वानरेण ह॥५८॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः।
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः॥५९॥
आदितस्तद्यथा वृत्तं सीतायाश्च विशेषतः।
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः॥६०॥
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम्।
ततो वानरराजेन वैरानुकथनं प्रति॥६१॥
रामायाऽऽवेदितं सर्वं प्रणयाद्दुःखितेन च।
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति॥६२॥
वालिनश्च बलं तत्र कथयामास वानरः।
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे॥६३॥

राघवः प्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम्।
दर्शयामास सुग्रीवो महापर्वतसन्निभम्॥ ६४॥

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम्॥ ६५॥

बिभेद च पुनः सालान् सप्तैकेन महेषुणा।
गिरिं रसातलं चैव जनयन् प्रत्ययं तदा॥ ६६॥

ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः।
किष्किन्धां रामसहितो जगाम च गुहां तदा॥ ६७॥

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः।
तेन नादेन महता निर्जगाम हरीश्वरः॥ ६८॥

अनुमान्य तदा तारां सुग्रीवेण समागतः।
निजघान च तत्रैनं शरेणैकेन राघवः॥ ६९॥

ततः सुग्रीववचनाद्धत्वा वालिनमाहवे।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत्॥ ७०॥

स च सर्वान् समानीय वानरान् वानरर्षभः।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम्॥ ७१॥

ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम्॥ ७२॥

तत्र लङ्कां समासाद्य पुरीं रावणपालिताम्।
ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम्॥ ७३॥

निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम्॥ ७४॥

पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि।
शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत्॥ ७५॥

अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात्।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया॥ ७६ ॥

ततो दग्ध्वा पुरीं लङ्काम् ऋते सीतां च मैथिलीम्।
रामाय प्रियमाख्यातुं पुनरायान् महाकपिः॥ ७७॥

सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम्।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः॥ ७८॥

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः॥ ७९॥

दर्शयामास चाऽऽत्मानं समुद्रः सरितां पतिः।
समुद्रवचनाच्चैव नलं सेतुमकारयत्॥ ८०॥

तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे।
रामः सीतामनुप्राप्य परां व्रीडामुपागमत्॥ ८१॥

तामुवाच ततो रामः परुषं जनसंसदि।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती॥ ८२॥

ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम्।
कर्मणा तेन महता त्रैलोक्यं सचराचरम्॥ ८३॥

सदेवर्षिगणं तुष्टं राघवस्य महात्मनः।
बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः॥ ८४॥

अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम्।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह॥ ८५॥

देवताभ्यो वरान् प्राप्य समुत्थाप्य च वानरान्।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्-वृतः॥ ८६॥

भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः।
भरतस्यान्तिके रामो हनूमन्तं व्यसर्जयत्॥ ८७॥

पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा।
पुष्पकं तत् समारुह्य नन्दिग्रामं ययौ तदा॥ ८८॥

नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान्॥ ८९॥

प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः॥ ९०॥

न पुत्रमरणं केचिद्-द्रक्ष्यन्ति पुरुषाः क्वचित्।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः॥ ९१॥

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा॥ ९२॥

न चापि क्षुद्भयं तत्र न तस्करभयं तथा।
नगराणि च राष्ट्राणि धनधान्ययुतानि च॥ ९३॥

नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः॥ ९४॥

गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम्।
असङ्ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः॥ ९५॥

राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति॥ ९६॥

दशवर्षसहस्राणि दशवर्षशतानि च।
रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति॥९७॥
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम्।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते॥९८॥
एतदाख्यानमायुष्यं पठन् रामायणं नरः।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते॥९९॥
पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात्।
वणिग्जनः पण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्त्वमीयात्॥१००॥
॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे प्रथमः सर्गः॥

## ॥मङ्गलश्लोकाः॥

स्वस्ति प्रजाभ्यः परिपालयन्ताम्
न्यायेन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यम्
लोकाः समस्ताः सुखिनो भवन्तु॥१॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥२॥
अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥३॥

चरितं रघुनाथस्य शतकोटि-प्रविस्तरम्।
एकैकमक्षरं पुंसां महापातकनाशनम्॥४॥

श्रृण्वन् रामायणं भक्त्या यः पादं पदमेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा॥५॥

रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः॥६॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते।
वृत्रनाशे समभवत् तत्ते भवतु मङ्गलम्॥७॥

यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत् पुरा।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम्॥८॥

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत्।
अदितिर्मङ्गलं प्रादात् तत्ते भवतु मङ्गलम्॥९॥

त्रीन् विक्रमान् प्रक्रमतो विष्णोरमिततेजसः।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम्॥१०॥

ऋषयः सागरा द्वीपा वेदा लोका दिशश्च ते।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा॥११॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम्॥१२॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वा प्रकृतेः स्वभावात्।
करोमि यद्यत् सकलं परस्मै
नारायणायेति समर्पयामि॥

# ॥ ललितात्रिशतीस्तोत्रम् ॥

## ॥ न्यासः ॥

अस्य श्रीललितात्रिशतीस्तोत्रमहामत्रस्य। भगवान् हयग्रीव ऋषिः।
अनुष्टुप् छन्दः। श्रीललितात्रिपुरसुन्दरी देवता।
ऐं बीजम्। क्लीं शक्तिः। सौः कीलकम्।
सकल-चिन्तितफलावाप्त्यर्थे जपे विनियोगः॥

## ॥ ध्यानम् ॥

अतिमधुरचापहस्ताम् अपरिमितामोदबाण-सौभाग्याम्।
अरुणाम् अतिशयकरुणाम् अभिनवकुलसुन्दरीं वन्दे॥

## ॥ स्तोत्रम् ॥

हयग्रीव उवाच

ककाररूपा कल्याणी कल्याणगुणशालिनी।
कल्याणशैलनिलया कमनीया कलावती॥ १॥

कमलाक्षी कल्मषघ्नी करुणामृतसागरा।
कदम्बकाननावासा कदम्बकुसुमप्रिया॥ २॥

कन्दर्पविद्या कन्दर्प-जनकापाङ्ग-वीक्षणा।
कर्पूरवीटि-सौरभ्य-कल्लोलित-ककुप्तटा ॥ ३॥

कलिदोषहरा कञ्जलोचना कम्रविग्रहा।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा॥ ४॥

एकाररूपा चैकाक्षर्यैकानेकाक्षराकृतिः।
एतत्तदित्यनिर्देश्या चैकानन्द-चिदाकृतिः॥ ५॥

एवमित्यागमाबोध्या चैकभक्ति-मदर्चिता।
एकाग्रचित्त-निर्ध्याता चैषणा-रहिताद्दता॥ ६॥

एलासुगन्धिचिकुरा चैनःकूटविनाशिनी।
एकभोगा चैकरसा चैकैश्वर्य-प्रदायिनी॥ ७॥

एकातपत्र-साम्राज्य-प्रदा चैकान्तपूजिता।
एधमानप्रभा चैजदनेकजगदीश्वरी॥ ८॥

एकवीरादि-संसेव्या चैकप्राभव-शालिनी।
ईकाररूपा चेशित्री चेप्सितार्थ-प्रदायिनी॥ ९॥

ईद्दगित्य-विनिर्देश्या चेश्वरत्व-विधायिनी।
ईशानादि-ब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा॥ १०॥

ईक्षित्रीक्षण-सृष्टाण्ड-कोटिरीश्वर-वल्लभा।
ईडिता चेश्वरार्धाङ्ग-शरीरेशाधि-देवता॥ ११॥

ईश्वर-प्रेरणकरी चेशताण्डव-साक्षिणी।
ईश्वरोत्सङ्ग-निलया चेतिबाधा-विनाशिनी॥ १२॥

ईहाविरहिता चेशशक्ति-रीषत्-स्मितानना।
लकाररूपा ललिता लक्ष्मी-वाणी-निषेविता॥ १३॥

लाकिनी ललनारूपा लसद्दाडिम-पाटला।
ललन्तिकालसत्फाला ललाट-नयनार्चिता॥ १४॥

लक्षणोज्ज्वल-दिव्याङ्गी लक्षकोट्यण्ड-नायिका।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः॥ १५॥

ललामराजदलिका लम्बिमुक्तालताञ्चिता।
लम्बोदर-प्रसूर्लभ्या लज्जाढ्या लयवर्जिता॥ १६॥

ह्रीङ्काररूपा ह्रीङ्कारनिलया ह्रीम्पदप्रिया।
ह्रीङ्कारबीजा ह्रीङ्कारमन्त्रा ह्रीङ्कारलक्षणा॥ १७॥

ह्रीङ्कारजपसुप्रीता ह्रीम्मती ह्रींविभूषणा।
ह्रींशीला ह्रीम्पदाराध्या ह्रीङ्गर्भा ह्रीम्पदाभिधा॥ १८॥

ह्रीङ्कारवाच्या ह्रीङ्कारपूज्या ह्रीङ्कारपीठिका।
ह्रीङ्कारवेद्या ह्रीङ्कारचिन्त्या ह्रीं ह्रीं-शरीरिणी॥ १९॥

हकाररूपा हलधृक्पूजिता हरिणेक्षणा।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता॥ २०॥

हयारूढा-सेविताङ्घ्रिर्हयमेध-समर्चिता।
हर्यक्षवाहना हंसवाहना हतदानवा॥ २१॥

हत्यादिपापशमनी हरिदश्वादि-सेविता।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्ति-प्रियाङ्गना॥ २२॥

हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता।
हरिकेशसखी हादिविद्या हालामदालसा॥ २३॥

सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला।
सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातना॥ २४॥

सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी॥ २५॥

सर्वाधारा सर्वगता सर्वावगुणवर्जिता।
सर्वारुणा सर्वमाता सर्वभूषण-भूषिता॥ २६॥

ककारार्था कालहन्त्री कामेशी कामितार्थदा।
कामसञ्जीवनी कल्या कठिनस्तन-मण्डला॥ २७॥

करभोरुः कलानाथ-मुखी कचजिताम्बुदा।
कटाक्षस्यन्दि-करुणा कपालि-प्राणनायिका॥ २८॥
कारुण्य-विग्रहा कान्ता कान्तिधूत-जपावलिः।
कलालापा कम्बुकण्ठी करनिर्जित-पल्लवा॥ २९॥
कल्पवल्ली-समभुजा कस्तूरी-तिलकाञ्चिता।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला॥ ३०॥
हारहारि-कुचाभोगा हाकिनी हल्यवर्जिता।
हरित्पति-समाराध्या हठात्कार-हतासुरा॥ ३१॥
हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा।
हल्लीसलास्य-सन्तुष्टा हंसमन्त्रार्थ-रूपिणी॥ ३२॥
हानोपादान-निर्मुक्ता हर्षिणी हरिसोदरी।
हाहाहूहू-मुख-स्तुत्या हानि-वृद्धि-विवर्जिता॥ ३३॥
हय्यङ्गवीन-हृदया हरिगोपारुणांशुका।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी॥ ३४॥
लास्य-दर्शन-सन्तुष्टा लाभालाभ-विवर्जिता।
लङ्घ्येतराज्ञा लावण्य-शालिनी लघु-सिद्धिदा॥ ३५॥
लाक्षारस-सवर्णाभा लक्ष्मणाग्रज-पूजिता।
लभ्येतरा लब्धभक्ति-सुलभा लाङ्गलायुधा॥ ३६॥
लग्न-चामर-हस्त-श्री-शारदा-परिवीजिता।
लज्जापद-समाराध्या लम्पटा लकुलेश्वरी॥ ३७॥
लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः।
ह्रीङ्कारिणी ह्रीङ्काराद्या ह्रीम्मध्या ह्रींशिखामणिः॥ ३८॥

ह्रीङ्कार-कुण्डाग्नि-शिखा ह्रीङ्कार-शशिचन्द्रिका।
ह्रीङ्कार-भास्कररुचिर्ह्रीङ्काराम्भोद-चञ्चला ॥ ३९ ॥

ह्रीङ्कार-कन्दाङ्कुरिका ह्रीङ्कारैक-परायणा।
ह्रीङ्कार-दीर्घिकाहंसी ह्रीङ्कारोद्यान-केकिनी ॥ ४० ॥

ह्रीङ्कारारण्य-हरिणी ह्रीङ्कारावाल-वल्लरी।
ह्रीङ्कार-पञ्जरशुकी ह्रीङ्काराङ्गण-दीपिका ॥ ४१ ॥

ह्रीङ्कार-कन्दरा-सिंही ह्रीङ्काराम्भोज-भृङ्गिका।
ह्रीङ्कार-सुमनो-माध्वी ह्रीङ्कार-तरुमञ्जरी ॥ ४२ ॥

सकाराख्या समरसा सकलागम-संस्तुता।
सर्ववेदान्त-तात्पर्यभूमिः सदसदाश्रया ॥ ४३ ॥

सकला सच्चिदानन्दा साध्या सद्गतिदायिनी।
सनकादिमुनिध्येया सदाशिव-कुटुम्बिनी ॥ ४४ ॥

सकलाधिष्ठान-रूपा सत्यरूपा समाकृतिः।
सर्वप्रपञ्च-निर्मात्री समानाधिक-वर्जिता ॥ ४५ ॥

सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेष्टदा।
ककारिणी काव्यलोला कामेश्वरमनोहरा ॥ ४६ ॥

कामेश्वर-प्राणनाडी कामेशोत्सङ्गवासिनी।
कामेश्वरालिङ्गिताङ्गी कामेश्वर-सुखप्रदा ॥ ४७ ॥

कामेश्वर-प्रणयिनी कामेश्वर-विलासिनी।
कामेश्वर-तपःसिद्धिः कामेश्वर-मनःप्रिया ॥ ४८ ॥

कामेश्वर-प्राणनाथा कामेश्वर-विमोहिनी।
कामेश्वर-ब्रह्मविद्या कामेश्वर-गृहेश्वरी ॥ ४९ ॥

कामेश्वराह्लादकरी कामेश्वर-महेश्वरी।
कामेश्वरी कामकोटिनिलया काङ्क्षितार्थदा॥५०॥

लकारिणी लब्धरूपा लब्धधीर्लब्ध-वाञ्छिता।
लब्धपाप-मनोदूरा लब्धाहङ्कार-दुर्गमा॥५१॥

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी॥५२॥

लब्धातिशय-सर्वाङ्ग-सौन्दर्या लब्धविभ्रमा।
लब्धरागा लब्धपतिर्लब्ध-नानागमस्थितिः॥५३॥

लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता।
ह्रीङ्कार-मूर्तिर्ह्रीङ्कार-सौधशृङ्गकपोतिका ॥५४॥

ह्रीङ्कार-दुग्धाब्धि-सुधा ह्रीङ्कार-कमलेन्दिरा।
ह्रीङ्कार-मणिदीपार्चिर्ह्रीङ्कार-तरुशारिका ॥५५॥

ह्रीङ्कार-पेटक-मणिर्ह्रीङ्कारादर्श-बिम्बिता ।
ह्रीङ्कार-कोशासिलता ह्रीङ्कारास्थान-नर्तकी॥५६॥

ह्रीङ्कार-शुक्तिका-मुक्तामणिर्ह्रीङ्कार-बोधिता।
ह्रीङ्कारमय-सौवर्णस्तम्भ-विद्रुम-पुत्रिका ॥५७॥

ह्रीङ्कार-वेदोपनिषध्रीङ्काराध्वर-दक्षिणा।
ह्रीङ्कार-नन्दनाराम-नवकल्पक-वल्लरी॥५८॥

ह्रीङ्कार-हिमवद्गङ्गा ह्रीङ्कारार्णव-कौस्तुभा।
ह्रीङ्कार-मन्त्र-सर्वस्वा ह्रीङ्कार-परसौख्यदा॥५९॥

॥इति श्री-ब्रह्माण्डपुराणे उत्तराखण्डे श्री-हयग्रीवागस्त्यसंवादे
श्री-ललितात्रिशती स्तोत्रकथनं सम्पूर्णम्॥

# ॥ गकारादि श्री-गणपति सहस्रनाम स्तोत्रम् ॥

अस्य श्रीगणपतिगकारादिसहस्रनाममालामन्त्रस्य।
दुर्वासा ऋषिः। अनुष्टुप् छन्दः। श्री-गणपतिर्देवता।
गं बीजम्। स्वाहा शक्तिः। ग्लौं कीलकम् ।
सकलाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥

## ॥ करन्यासः ॥

ओं अङ्गुष्ठाभ्यां नमः। श्रीं तर्जनीभ्यां नमः।
ह्रीं मध्यमाभ्यां नमः। क्रीं अनामिकाभ्यां नमः।
ग्लौं कनिष्ठिकाभ्यां नमः। गं करतलकरपृष्ठाभ्यां नमः।
एवं हृदयादिन्यासः।
अथवा षड्दीर्घभाजागमितिबीजेन कराङ्गन्यासः ॥

## ॥ ध्यानम् ॥

ओङ्कार-सन्निभमिभाननमिन्दुभालम्
मुक्ताग्रबिन्दुममलद्युतिमेकदन्तम् ।
लम्बोदरं कलचतुर्भुजमादिदेवम्
ध्यायेन्महागणपतिं मतिसिद्धिकान्तम् ॥

## ॥ स्तोत्रम् ॥

ओं गणेश्वरो गणाध्यक्षो गणाराध्यो गणप्रियः।
गणनाथो गणस्वामी गणेशो गणनायकः ॥ १ ॥
गणमूर्तिर्गणपतिर्गणत्राता गणञ्जयः।
गणपोऽथ गणक्रीडो गणदेवो गणाधिपः ॥ २ ॥

गणज्येष्ठो गणश्रेष्ठो गणप्रेष्ठो गणाधिराट्।
गणराड् गणगोप्ताथ गणाङ्गो गणदैवतम्॥ ३॥

गणबन्धुर्गणसुहृद्गणाधीशो गणप्रथः।
गणप्रियसखः शश्वद्गणप्रियसुहृत् तथा॥ ४॥

गणप्रियरतो नित्यं गणप्रीतिविवर्धनः।
गणमण्डलमध्यस्थो गणकेलिपरायणः॥ ५॥

गणाग्रणीर्गणेशानो गणगीतो गणोच्छ्रयः।
गण्यो गणहितो गर्जद्गणसेनो गणोद्धतः॥ ६॥

गणभीतिप्रमथनो गणभीत्यपहारकः।
गणनार्हो गणप्रौढो गणभर्ता गणप्रभुः॥ ७॥

गणसेनो गणचरो गणप्रज्ञो गणैकराट्।
गणाग्र्यो गणनामा च गणपालनतत्परः॥ ८॥

गणजिद्गणगर्भस्थो गणप्रवणमानसः।
गणगर्वपरीहर्ता गणो गणनमस्कृतः॥ ९॥

गणार्चिताङ्घ्रियुगलो गणरक्षणकृत् सदा।
गणध्यातो गणगुरुर्गणप्रणयतत्परः॥ १०॥

गणागणपरित्राता गणाधिहरणोद्धुरः।
गणसेतुर्गणनुतो गणकेतुर्गणाग्रगः॥ ११॥

गणहेतुर्गणग्राही गणानुग्रहकारकः।
गणागणानुग्रहभूर्गणागणवरप्रदः ॥ १२॥

गणस्तुतो गणप्राणो गणसर्वस्वदायकः।
गणवल्लभमूर्तिश्च गणभूतिर्गणेष्टदः॥ १३॥

गणसौख्यप्रदाता च गणदुःखप्रणाशनः।
गणप्रथितनामा च गणाभीष्टकरः सदा॥ १४॥
गणमान्यो गणख्यातो गणवीतो गणोत्कटः।
गणपालो गणवरो गणगौरवदायकः॥ १५॥
गणगर्जितसन्तुष्टो गणस्वच्छन्दगः सदा।
गणराजो गणश्रीदो गणाभयकरः क्षणात्॥ १६॥
गणमूर्धाभिषिक्तश्च गणसैन्यपुरस्सरः।
गुणातीतो गुणमयो गुणत्रयविभागकृत्॥ १७॥
गुणी गुणाकृतिधरो गुणशाली गुणप्रियः।
गुणपूर्णो गुणाम्भोधिर्गुणभाग् गुणदूरगः॥ १८॥
गुणागुणवपुर्गौणशरीरो गुणमण्डितः।
गुणस्रष्टा गुणेशानो गुणेशोऽथ गुणेश्वरः॥ १९॥
गुणसृष्टजगत्सङ्घो गुणसङ्घो गुणैकराट्।
गुणप्रवृष्टो गुणभूर्गुणीकृतचराचरः॥ २०॥
गुणप्रवणसन्तुष्टो गुणहीनपराङ्मुखः।
गुणैकभूर्गुणश्रेष्ठो गुणज्येष्ठो गुणप्रभुः॥ २१॥
गुणज्ञो गुणसम्पूज्यो गुणैकसदनं सदा।
गुणप्रणयवान् गौणप्रकृतिर्गुणभाजनम्॥ २२॥
गुणिप्रणतपादाब्जो गुणिगीतो गुणोज्ज्वलः।
गुणवान् गुणसम्पन्नो गुणानन्दितमानसः॥ २३॥
गुणसञ्चारचतुरो गुणसञ्चयसुन्दरः।
गुणगौरो गुणाधारो गुणसंवृतचेतनः॥ २४॥

गुणकृद्गुणभृन्नित्यं गुणाग्र्यो गुणपारदृक्।
गुणप्रचारी गुणयुग् गुणागुणविवेककृत्॥ २५॥
गुणाकरो गुणकरो गुणप्रवणवर्धनः।
गुणगूढचरो गौणसर्वसंसारचेष्टितः॥ २६॥
गुणदक्षिणसौहार्दो गुणलक्षणतत्त्ववित्।
गुणहारी गुणकलो गुणसङ्घसखः सदा॥ २७॥
गुणसंस्कृतसंसारो गुणतत्त्वविवेचकः।
गुणगर्वधरो गौणसुखदुःखोदयो गुणः॥ २८॥
गुणाधीशो गुणलयो गुणवीक्षणलालसः।
गुणगौरवदाता च गुणदाता गुणप्रदः॥ २९॥
गुणकृद्गुणसम्बन्धो गुणभृद्गुणबन्धनः।
गुणहृद्यो गुणस्थायी गुणदायी गुणोत्कटः॥ ३०॥
गुणचक्रधरो गौणावतारो गुणबान्धवः।
गुणबन्धुर्गुणप्रज्ञो गुणप्राज्ञो गुणालयः॥ ३१॥
गुणधाता गुणप्राणो गुणगोपो गुणाश्रयः।
गुणयायी गुणाधायी गुणपो गुणपालकः॥ ३२॥
गुणाहृततनुर्गौणो गीर्वाणो गुणगौरवः।
गुणवत्पूजितपदो गुणवत्प्रीतिदायकः॥ ३३॥
गुणवद्गीतकीर्तिश्च गुणवद्बद्धसौहृदः।
गुणवद्वरदो नित्यं गुणवत्प्रतिपालकः॥ ३४॥
गुणवद्गुणसन्तुष्टो गुणवद्रचितस्तवः।
गुणवद्रक्षणपरो गुणवत्प्रणयप्रियः॥ ३५॥

गुणवच्चक्रसञ्चारो गुणवत्कीर्तिवर्धनः।
गुणवद्गुणचित्तस्थो गुणवद्गुणरक्षकः॥३६॥
गुणवत्पोषणकरो गुणवच्छत्रुसूदनः।
गुणवत्सिद्धिदाता च गुणवद्गौरवप्रदः॥३७॥
गुणवत्प्रवणस्वान्तो गुणवद्गुणभूषणः।
गुणवत्कुलविद्वेषिविनाशकरणक्षमः ॥३८॥
गुणिस्तुतगुणो गर्जप्रलयाम्बुदनिःस्वनः।
गजो गजपतिर्गर्जद्गजयुद्धविशारदः॥३९॥
गजास्यो गजकर्णोऽथ गजराजो गजाननः।
गजरूपधरो गर्जद्गजयूथोद्धुरध्वनिः॥४०॥
गजाधीशो गजाधारो गजासुरजयोद्धुरः।
गजदन्तो गजवरो गजकुम्भो गजध्वनिः॥४१॥
गजमायो गजमयो गजश्रीर्गजगर्जितः।
गजामयहरो नित्यं गजपुष्टिप्रदायकः॥४२॥
गजोत्पत्तिर्गजत्राता गजहेतुर्गजाधिपः।
गजमुख्यो गजकुलप्रवरो गजदैत्यहा॥४३॥
गजकेतुर्गजाध्यक्षो गजसेतुर्गजाकृतिः।
गजवन्द्यो गजप्राणो गजसेव्यो गजप्रभुः॥४४॥
गजमत्तो गजेशानो गजेशो गजपुङ्गवः।
गजदन्तधरो गुञ्जन्मधुपो गजवेषभृत्॥४५॥
गजच्छन्नो गजाग्रस्थो गजयायी गजाजयः।
गजराड्गजयूथस्थो गजगञ्जकभञ्जकः॥४६॥

गर्जितोज्झितदैत्यासुर्गर्जितत्रातविष्टपः ।
गानज्ञो गानकुशलो गानतत्त्वविवेचकः ॥४७॥
गानश्लाघी गानरसो गानज्ञानपरायणः।
गानागमज्ञो गानाङ्गो गानप्रवणचेतनः ॥४८॥
गानकृद्गानचतुरो गानविद्याविशारदः।
गानध्येयो गानगम्यो गानध्यानपरायणः ॥४९॥
गानभूर्गानशीलश्च गानशाली गतश्रमः।
गानविज्ञानसम्पन्नो गानश्रवणलालसः ॥५०॥
गानयत्तो गानमयो गानप्रणयवान् सदा।
गानध्याता गानबुद्धिर्गानोत्सुकमनाः पुनः ॥५१॥
गानोत्सुको गानभूमिर्गानसीमा गुणोज्ज्वलः।
गानङ्गज्ञानवान् गानमानवान् गानपेशलः ॥५२॥
गानवत्प्रणयो गानसमुद्रो गानभूषणः।
गानसिन्धुर्गानपरो गानप्राणो गणाश्रयः ॥५३॥
गानैकभूर्गानहृष्टो गानचक्षुर्गणैकदृक्।
गानमत्तो गानरुचिर्गानविद्गानवित्प्रियः ॥५४॥
गानान्तरात्मा गानाढ्यो गानभ्राजत्सभः सदा।
गानमयो गानधरो गानविद्याविशोधकः ॥५५॥
गानाहितघ्नो गानेन्द्रो गानलीनो गतिप्रियः।
गानाधीशो गानलयो गानाधारो गतीश्वरः ॥५६॥
गानवन्मानदो गानभूतिर्गानैकभूतिमान्।
गानताननतो गानतानदानविमोहितः ॥५७॥

गुरुर्गुरुदरश्रोणिर्गुरुतत्त्वार्थदर्शनः ।
गुरुस्तुतो गुरुगुणो गुरुमायो गुरुप्रियः ॥ ५८ ॥

गुरुकीर्तिर्गुरुभुजो गुरुवक्षा गुरुप्रभः ।
गुरुलक्षणसम्पन्नो गुरुद्रोहपराङ्मुखः ॥ ५९ ॥

गुरुविद्यो गुरुप्राणो गुरुबाहुबलोच्छ्रयः ।
गुरुदैत्यप्राणहरो गुरुदैत्यापहारकः ॥ ६० ॥

गुरुगर्वहरो गुह्यप्रवरो गुरुदर्पहा ।
गुरुगौरवदायी च गुरुभीत्यपहारकः ॥ ६१ ॥

गुरुशुण्डो गुरुस्कन्धो गुरुजङ्घो गुरुप्रथः ।
गुरुभालो गुरुगलो गुरुश्रीर्गुरुगर्वनुत् ॥ ६२ ॥

गुरूरुर्गुरुपीनांसो गुरुप्रणयलालसः ।
गुरुमुख्यो गुरुकुलस्थायी गुरुगुणः सदा ॥ ६३ ॥

गुरुसंशयभेत्ता च गुरुमानप्रदायकः ।
गुरुधर्मसदाराध्यो गुरुधर्मनिकेतनः ॥ ६४ ॥

गुरुदैत्यकुलच्छेत्ता गुरुसैन्यो गुरुद्युतिः ॥ ६५ ॥

गुरुधर्माग्रगण्योऽथ गुरुधर्मधुरन्धरः ।
गरिष्ठो गुरुसन्तापशमनो गुरुपूजितः ॥ ६६ ॥

गुरुधर्मधरो गौरधर्माधारो गदापहः ।
गुरुशास्त्रविचारज्ञो गुरुशास्त्रकृतोद्यमः ॥ ६७ ॥

गुरुशास्त्रार्थनिलयो गुरुशास्त्रालयः सदा ।
गुरुमन्त्रो गुरुश्रेष्ठो गुरुमन्त्रफलप्रदः ॥ ६८ ॥

गुरुस्त्रीगमनोद्दामप्रायश्चित्तनिवारकः ।
गुरुसंसारसुखदो गुरुसंसारदुःखभित् ॥ ६९ ॥
गुरुश्लाघापरो गौरभानुखण्डावतंसभृत् ।
गुरुप्रसन्नमूर्तिश्च गुरुशापविमोचकः ॥ ७० ॥
गुरुकान्तिर्गुरुमयो गुरुशासनपालकः ।
गुरुतन्त्रो गुरुप्रज्ञो गुरुभो गुरुदैवतम् ॥ ७१ ॥
गुरुविक्रमसञ्चारो गुरुदृग्गुरुविक्रमः ।
गुरुक्रमो गुरुप्रेष्ठो गुरुपाखण्डखण्डकः ॥ ७२ ॥
गुरुगर्जितसम्पूर्णब्रह्माण्डो गुरुगर्जितः ।
गुरुपुत्रप्रियसखो गुरुपुत्रभयापहः ॥ ७३ ॥
गुरुपुत्रपरित्राता गुरुपुत्रवरप्रदः ।
गुरुपुत्रार्तिशमनो गुरुपुत्राधिनाशनः ॥ ७४ ॥
गुरुपुत्रप्राणदाता गुरुभक्तिपरायणः ।
गुरुविज्ञानविभवो गौरभानुवरप्रदः ॥ ७५ ॥
गौरभानुस्तुतो गौरभानुत्रासापहारकः ।
गौरभानुप्रियो गौरभानुर्गौरववर्धनः ॥ ७६ ॥
गौरभानुपरित्राता गौरभानुसखः सदा ।
गौरभानुर्प्रभुर्गौरभानुभीतिप्रणाशनः ॥ ७७ ॥
गौरीतेजःसमुत्पन्नो गौरीहृदयनन्दनः ।
गौरीस्तनन्धयो गौरीमनोवाञ्छितसिद्धिकृत् ॥ ७८ ॥
गौरो गौरगुणो गौरप्रकाशो गौरभैरवः ।
गौरीशनन्दनो गौरीप्रियपुत्रो गदाधरः ॥ ७९ ॥

गौरीवरप्रदो गौरीप्रणयो गौरसच्छविः।
गौरीगणेश्वरो गौरीप्रवणो गौरभावनः ॥ ८० ॥
गौरात्मा गौरकीर्तिश्च गौरभावो गरिष्ठदृक्।
गौतमो गौतमीनाथो गौतमीप्राणवल्लभः ॥ ८१ ॥
गौतमाभीष्टवरदो गौतमाभयदायकः।
गौतमप्रणयप्रह्वो गौतमाश्रमदुःखहा ॥ ८२ ॥
गौतमीतीरसञ्चारी गौतमीतीर्थनायकः।
गौतमापत्परिहारो गौतमाधिविनाशनः ॥ ८३ ॥
गोपतिर्गोधनो गोपो गोपालप्रियदर्शनः।
गोपालो गोगणाधीशो गोकश्मलनिवर्तकः ॥ ८४ ॥
गोसहस्रो गोपवरो गोपगोपीसुखावहः।
गोवर्धनो गोपगोपो गोपो गोकुलवर्धनः ॥ ८५ ॥
गोचरो गोचराध्यक्षो गोचरप्रीतिवृद्धिकृत्।
गोमी गोकष्टसन्त्राता गोसन्तापनिवर्तकः ॥ ८६ ॥
गोष्ठो गोष्ठाश्रयो गोष्ठपतिर्गोधनवर्धनः।
गोष्ठप्रियो गोष्ठमयो गोष्ठामयनिवर्तकः ॥ ८७ ॥
गोलोको गोलको गोभृद्गोभर्ता गोसुखावहः।
गोधुग्गोधुग्गणप्रेष्ठो गोदोग्धा गोमयप्रियः ॥ ८८ ॥
गोत्रं गोत्रपतिर्गोत्रप्रभुर्गोत्रभयापहः।
गोत्रवृद्धिकरो गोत्रप्रियो गोत्रार्तिनाशनः ॥ ८९ ॥
गोत्रोद्धारपरो गोत्रप्रवरो गोत्रदैवतम्।
गोत्रविख्यातनामा च गोत्री गोत्रप्रपालकः ॥ ९० ॥

गोत्रसेतुर्गोत्रकेतुर्गोत्रहेतुर्गतक्लमः ।
गोत्रत्राणकरो गोत्रपतिर्गोत्रेशपूजितः ॥ ९१ ॥
गोत्रभिद्गोत्रभित्त्राता गोत्रभिद्वरदायकः।
गोत्रभित्पूजितपदो गोत्रभिच्छत्रुसूदनः ॥ ९२ ॥
गोत्रभित्प्रीतिदो नित्यं गोत्रभिद्गोत्रपालकः।
गोत्रभिद्गीतचरितो गोत्रभिद्राज्यरक्षकः ॥ ९३ ॥
गोत्रभिज्जयदायी च गोत्रभित्प्रणयः सदा।
गोत्रभिद्भयसम्भेत्ता गोत्रभिन्मानदायकः ॥ ९४ ॥
गोत्रभिद्गोपनपरो गोत्रभित्सैन्यनायकः।
गोत्राधिपप्रियो गोत्रपुत्रीपुत्रो गिरिप्रियः ॥ ९५ ॥
ग्रन्थज्ञो ग्रन्थकृद्ग्रन्थग्रन्थिभिद्ग्रन्थविघ्नहा।
ग्रन्थादिर्ग्रन्थसञ्चारो ग्रन्थश्रवणलोलुपः ॥ ९६ ॥
ग्रन्थादीनक्रियो ग्रन्थप्रियो ग्रन्थार्थतत्त्ववित्।
ग्रन्थसंशयसञ्छेदी ग्रन्थवक्ता ग्रहाग्रणीः ॥ ९७ ॥
ग्रन्थगीतगुणो ग्रन्थगीतो ग्रन्थादिपूजितः।
ग्रन्थारम्भस्तुतो ग्रन्थग्राही ग्रन्थार्थपारदृक् ॥ ९८ ॥
ग्रन्थदृग्ग्रन्थविज्ञानो ग्रन्थसन्दर्भशोधकः।
ग्रन्थकृत्पूजितो ग्रन्थकरो ग्रन्थपरायणः ॥ ९९ ॥
ग्रन्थपारायणपरो ग्रन्थसन्देहभञ्जकः।
ग्रन्थकृद्वरदाता च ग्रन्थकृद्वन्दितः सदा ॥ १०० ॥
ग्रन्थानुरक्तो ग्रन्थज्ञो ग्रन्थानुग्रहदायकः।
ग्रन्थान्तरात्मा ग्रन्थार्थपण्डितो ग्रन्थसौहृदः ॥ १०१ ॥

ग्रन्थपारङ्गमो ग्रन्थगुणविद्ग्रन्थविग्रहः।
ग्रन्थसेतुर्ग्रन्थहेतुर्ग्रन्थकेतुर्ग्रहाग्रगः ॥ १०२ ॥

ग्रन्थपूज्यो ग्रन्थगेयो ग्रन्थग्रथनलालसः।
ग्रन्थभूमिर्ग्रहश्रेष्ठो ग्रहकेतुर्ग्रहाश्रयः॥ १०३ ॥

ग्रन्थकारो ग्रन्थकारमान्यो ग्रन्थप्रसारकः।
ग्रन्थश्रमज्ञो ग्रन्थाङ्गो ग्रन्थभ्रमनिवारकः॥ १०४॥

ग्रन्थप्रवणसर्वाङ्गो ग्रन्थप्रणयतत्परः।
गीतं गीतगुणो गीतकीर्तिर्गीतविशारदः॥ १०५॥

गीतस्फीतयशा गीतप्रणयो गीतचञ्चुरः।
गीतप्रसन्नो गीतात्मा गीतलोलो गतस्पृहः॥ १०६ ॥

गीताश्रयो गीतमयो गीततत्त्वार्थकोविदः।
गीतसंशयसञ्छेत्ता गीतसङ्गीतशासनः॥ १०७॥

गीतार्थज्ञो गीततत्त्वो गीतातत्त्वं गताश्रयः।
गीतासारोऽथ गीताकृद्गीताकृद्विघ्ननाशनः॥ १०८॥

गीताशक्तो गीतलीनो गीताविगतसञ्ज्वरः।
गीतैकदृग्गीतभूतिर्गीतप्रीतो गतालसः॥ १०९॥

गीतवाद्यपटुर्गीतप्रभुर्गीतार्थतत्त्ववित्।
गीतागीतविवेकज्ञो गीताप्रवणचेतनः॥ ११०॥

गतभीर्गतविद्वेषो गतसंसारबन्धनः।
गतमायो गतत्रासो गतदुःखो गतज्वरः॥ १११ ॥

गतासुहृद्गतज्ञानो गतदुष्टाशयो गतः।
गतार्तिर्गतसङ्कल्पो गतदुष्टविचेष्टितः॥ ११२॥

गताहङ्कारसञ्चारो गतदर्पो गताहितः।
गतविघ्नो गतभयो गतागतनिवारकः॥ ११३॥
गतव्यथो गतापायो गतदोषो गतेः परः।
गतसर्वविकारोऽथ गतगञ्जितकुञ्जरः॥ ११४॥
गतकम्पितभूपृष्ठो गतरुग्गतकल्मषः।
गतदैन्यो गतस्तैन्यो गतमानो गतश्रमः॥ ११५॥
गतक्रोधो गतग्लानिर्गतम्लानो गतभ्रमः।
गताभावो गतभवो गततत्त्वार्थसंशयः॥ ११६॥
गयासुरशिरश्छेत्ता गयासुरवरप्रदः।
गयावासो गयानाथो गयावासिनमस्कृतः॥ ११७॥
गयातीर्थफलाध्यक्षो गयायात्राफलप्रदः।
गयामयो गयाक्षेत्रं गयाक्षेत्रनिवासकृत्॥ ११८॥
गयावासिस्तुतो गयान्मधुव्रतलसत्कटः।
गायको गायकवरो गायकेष्टफलप्रदः॥ ११९॥
गायकप्रणयी गाता गायकाभयदायकः।
गायकप्रवणस्वान्तो गायकः प्रथमः सदा॥ १२०॥
गायकोद्गीतसम्प्रीतो गायकोत्कटविघ्नहा।
गानगेयो गानकेशो गायकान्तरसञ्चरः॥ १२१॥
गायकप्रियदः शश्वद्गायकाधीनविग्रहः।
गेयो गेयगुणो गेयचरितो गेयतत्त्ववित्॥ १२२॥
गायकत्रासहा ग्रन्थो ग्रन्थतत्त्वविवेचकः।
गाढानुरागो गाढाङ्गो गाढागङ्गाजलोऽन्वहम्॥ १२३॥

गाढावगाढजलधिर्गाढप्रज्ञो गतामयः।
गाढप्रत्यर्थिसैन्योऽथ गाढानुग्रहतत्परः ॥ १२४ ॥
गाढश्लेषरसाभिज्ञो गाढनिर्वृतिसाधकः।
गङ्गाधरेष्टवरदो गङ्गाधरभयापहः ॥ १२५ ॥
गङ्गाधरगुरुर्गङ्गाधरध्यातपदः सदा।
गङ्गाधरस्तुतो गङ्गाधराराध्यो गतस्मयः ॥ १२६ ॥
गङ्गाधरप्रियो गङ्गाधरो गङ्गाम्बुसुन्दरः।
गङ्गाजलरसास्वादचतुरो गाङ्गतीरयः ॥ १२७ ॥
गङ्गाजलप्रणयवान् गङ्गातीरविहारकृत्।
गङ्गाप्रियो गङ्गाजलावगाहनपरः सदा ॥ १२८ ॥
गन्धमादनसंवासो गन्धमादनकेलिकृत्।
गन्धानुलिप्तसर्वाङ्गो गन्धलुब्धमधुव्रतः ॥ १२९ ॥
गन्धो गन्धर्वराजोऽथ गन्धर्वप्रियकृत् सदा।
गन्धर्वविद्यातत्त्वज्ञो गन्धर्वप्रीतिवर्धनः ॥ १३० ॥
गकारबीजनिलयो गकारो गर्विगर्वनुत्।
गन्धर्वगणसंसेव्यो गन्धर्ववरदायकः ॥ १३१ ॥
गन्धर्वो गन्धमातङ्गो गन्धर्वकुलदैवतम्।
गन्धर्वगर्वसञ्छेत्ता गन्धर्ववरदर्पहा ॥ १३२ ॥
गन्धर्वप्रवणस्वान्तो गन्धर्वगणसंस्तुतः।
गन्धर्वार्चितपादाब्जो गन्धर्वभयहारकः ॥ १३३ ॥
गन्धर्वाभयदः शश्वद्गन्धर्वप्रतिपालकः।
गन्धर्वगीतचरितो गन्धर्वप्रणयोत्सुकः ॥ १३४ ॥

गन्धर्वगानश्रवणप्रणयी गर्वभञ्जनः।
गन्धर्वत्राणसन्नद्धो गन्धर्वसमरक्षमः॥ १३५॥
गन्धर्वस्त्रीभिराराध्यो गानं गानपटुः सदा।
गच्छो गच्छपतिर्गच्छनायको गच्छगर्वहा॥ १३६॥
गच्छराजोऽथ गच्छेशो गच्छराजनमस्कृतः।
गच्छप्रियो गच्छगुरुर्गच्छत्राणकृतोद्यमः॥ १३७॥
गच्छप्रभुर्गच्छचरो गच्छप्रियकृतोद्यमः।
गच्छगीतगुणो गच्छमर्यादाप्रतिपालकः॥ १३८॥
गच्छधाता गच्छभर्ता गच्छवन्द्यो गुरोर्गुरुः।
गृत्सो गृत्समदो गृत्समदाभीष्टवरप्रदः॥ १३९॥
गीर्वाणगीतचरितो गीर्वाणगणसेवितः।
गीर्वाणवरदाता च गीर्वाणभयनाशकृत्॥ १४०॥
गीर्वाणगुणसंवीतो गीर्वाणारातिसूदनः।
गीर्वाणधाम गीर्वाणगोप्ता गीर्वाणगर्वहृत्॥ १४१॥
गीर्वाणार्तिहरो नित्यं गीर्वाणवरदायकः।
गीर्वाणशरणं गीतनामा गीर्वाणसुन्दरः॥ १४२॥
गीर्वाणप्राणदो गन्ता गीर्वाणानीकरक्षकः।
गुहेहापूरको गन्धमत्तो गीर्वाणपुष्टिदः॥ १४३॥
गीर्वाणप्रयुतत्राता गीतगोत्रो गताहितः।
गीर्वाणसेवितपदो गीर्वाणप्रथितो गलत्॥ १४४॥
गीर्वाणगोत्रप्रवरो गीर्वाणफलदायकः।
गीर्वाणप्रियकर्ता च गीर्वाणागमसारवित्॥ १४५॥

गीर्वाणागमसम्पत्तिर्गीर्वाणव्यसनापहः।
गीर्वाणप्रणयो गीतग्रहणोत्सुकमानसः॥ १४६॥

गीर्वाणभ्रमसम्भेत्ता गीर्वाणगुरुपूजितः।
ग्रहो ग्रहपतिर्ग्राहो ग्रहपीडाप्रणाशनः॥ १४७॥

ग्रहस्तुतो ग्रहाध्यक्षो ग्रहेशो ग्रहदैवतम्।
ग्रहकृद्ग्रहभर्ता च ग्रहेशानो ग्रहेश्वरः॥ १४८॥

ग्रहाराध्यो ग्रहत्राता ग्रहगोप्ता ग्रहोत्कटः।
ग्रहगीतगुणो ग्रन्थप्रणेता ग्रहवन्दितः॥ १४९॥

गवी गवीश्वरो गर्वी गर्विष्ठो गर्विगर्वहा।
गवाम्प्रियो गवान्नाथो गवीशानो गवाम्पती॥ १५०॥

गव्यप्रियो गवाङ्गोप्ता गविसम्पत्तिसाधकः।
गविरक्षणसन्नद्धो गवांभयहरः क्षणात्॥ १५१॥

गविगर्वहरो गोदो गोप्रदो गोजयप्रदः।
गजायुतबलो गण्डगुञ्जन्मत्तमधुव्रतः॥ १५२॥

गण्डस्थललसद्दानमिलन्मत्तालिमण्डितः।
गुडो गुडप्रियो गुण्डगलद्दानो गुडाशनः॥ १५३॥

गुडाकेशो गुडाकेशसहायो गुडलड्डुभुक्।
गुडभुग्गुडभुग्गणयो गुडाकेशवरप्रदः॥ १५४॥

गुडाकेशार्चितपदो गुडाकेशसखः सदा।
गदाधरार्चितपदो गदाधरवरप्रदः॥ १५५॥

गदायुधो गदापाणिर्गदायुद्धविशारदः।
गदहा गददर्पघ्नो गदगर्वप्रणाशनः॥ १५६॥

गदग्रस्तपरित्राता गदाडम्बरखण्डकः।
गुहो गुहाग्रजो गुप्तो गुहाशायी गुहाशयः॥ १५७॥

गुहप्रीतिकरो गूढो गूढगुल्फो गुणैकदृक्।
गीर्गीष्पतिर्गिरीशानो गीर्देवीगीतसद्गुणः॥ १५८॥

गीर्देवो गीष्प्रियो गीर्भूर्गीरात्मा गीष्प्रियङ्करः।
गीर्भूमिर्गीरसन्नोऽथ गीःप्रसन्नो गिरीश्वरः॥ १५९॥

गिरीशजो गिरौशायी गिरिराजसुखावहः।
गिरिराजार्चितपदो गिरिराजनमस्कृतः॥ १६०॥

गिरिराजगुहाविष्टो गिरिराजाभयप्रदः।
गिरिराजेष्टवरदो गिरिराजप्रपालकः॥ १६१॥

गिरिराजसुतासूनुर्गिरिराजजयप्रदः।
गिरिव्रजवनस्थायी गिरिव्रजचरः सदा॥ १६२॥

गर्गो गर्गप्रियो गर्गदेहो गर्गनमस्कृतः।
गर्गभीतिहरो गर्गवरदो गर्गसंस्तुतः॥ १६३॥

गर्गगीतप्रसन्नात्मा गर्गानन्दकरः सदा।
गर्गप्रियो गर्गमानप्रदो गर्गारिभञ्जकः॥ १६४॥

गर्गवर्गपरित्राता गर्गसिद्धिप्रदायकः।
गर्गग्लानिहरो गर्गभ्रमहृद्गर्गसङ्गतः॥ १६५॥

गर्गाचार्यो गर्गमुनिर्गर्गसम्मानभाजनः।
गम्भीरो गणितप्रज्ञो गणितागमसारवित्॥ १६६॥

गणको गणकश्लाघ्यो गणकप्रणयोत्सुकः।
गणकप्रवणस्वान्तो गणितो गणितागमः॥ १६७॥

गद्यं गद्यमयो गद्यपद्यविद्याविशारदः।
गललग्नमहानागो गलदर्चिर्गलन्मदः॥ १६८॥

गलत्कुष्ठिव्यथाहन्ता गलत्कुष्ठिसुखप्रदः।
गम्भीरनाभिर्गम्भीरस्वरो गम्भीरलोचनः॥ १६९॥

गम्भीरगुणसम्पन्नो गम्भीरगतिशोभनः।
गर्भप्रदो गर्भरूपो गर्भापद्विनिवारकः॥ १७०॥

गर्भागमनसन्नाशो गर्भदो गर्भशोकनुत्।
गर्भत्राता गर्भगोप्ता गर्भपुष्टिकरः सदा॥ १७१॥

गर्भाश्रयो गर्भमयो गर्भामयनिवारकः।
गर्भाधारो गर्भधरो गर्भसन्तोषसाधकः॥ १७२॥

गर्भगौरवसन्धानसन्धानं गर्भवर्गहृत्।
गरीयान् गर्वनुद्गर्वमर्दी गरदमर्दकः॥ १७३॥

गरसन्तापशमनो गुरुराज्यसुखप्रदः।

## ॥ फलश्रुतिः ॥

नाम्नां सहस्रमुदितं महद्गणपतेरिदम्॥ १७४॥

गकारादि जगद्वन्द्यं गोपनीयं प्रयत्नतः।
य इदं प्रयतः प्रातस्त्रिसन्ध्यं वा पठेन्नरः॥ १७५॥

वाञ्छितं समवाप्नोति नात्र कार्या विचारणा।
पुत्रार्थी लभते पुत्रान् धनार्थी लभते धनम्॥ १७६॥

विद्यार्थी लभते विद्यां सत्यं सत्यं न संशयः।
भूर्जत्वचि समालिख्य कुङ्कुमेन समाहितः॥ १७७॥

चतुर्थ्यां भौमवारो च चन्द्रसूर्योपरागके।
पूजयित्वा गणधीशं यथोक्तविधिना पुरा॥ १७८॥
पूजयेद्यो यथाशक्त्या जुहुयाच्च शमीदलैः।
गुरुं सम्पूज्य वस्त्राद्यैः कृत्वा चापि प्रदक्षिणम्॥ १७९॥
धारयेद्यः प्रयत्नेन स साक्षाद्गणनायकः।
सुराश्चासुरवर्याश्च पिशाचाः किन्नरोरगः॥ १८०॥
प्रणमन्ति सदा तं वै दुष्ट्वा विस्मितमानसाः।
राजा सपदि वश्यः स्यात् कामिन्यस्तद्वशो स्थिराः॥ १८१॥
तस्य वंशो स्थिरा लक्ष्मीः कदाऽपि न विमुञ्चति।
निष्कामो यः पठेदेतद्गणेश्वरपरायणः॥ १८२॥
स प्रतिष्ठां परां प्राप्य निजलोकमवाप्नुयात्।
इदं ते कीर्तितं नाम्नां सहस्रं देवि पावनम्॥ १८३॥
न देयं कृपणायाथ शठाय गुरुविद्विषे।
दत्त्वा च भ्रंशमाप्नोति देवतायाः प्रकोपतः॥ १८४॥
इति श्रुत्वा महादेवी तदा विस्मितमानसा।
पूजयामास विधिवद्गणेश्वरपदद्वयम्॥ १८५॥

॥इति श्री-रुद्रयामले महागुप्तसारे शिवपार्वतीसंवादे गकारादि
श्री-गणपतिसहस्रनामस्तोत्रं सम्पूर्णम्॥